# ॥ श्री शिव सहस्रनाम स्तोत्रम् ॥

## । ॐ श्री गणेशाय नमः ।

### पूर्व पीठिका

ओंकारनिलयं देवं गजवक्त्रं चतुर्भुजम् ।
पिचण्डिलमहं वन्दे सर्वविघ्नोपशान्तये ॥
श्रुतिस्मृतिपुराणानामालयं करुणालयम् ।
नमामि भगवत्पादशंकरं लोकशंकरम् ॥
शंकरं शंकराचार्यम् केशवं बादरायणम् ।
सूत्र भाष्य कृतौ वन्दे भगवन्तौ पुनःपुनः ॥
वन्दे शम्भु उमापतिं सुरगुरुं वन्दे जगत्कारणं
वन्दे पन्नगभूषणं मृगधरं वन्दे पशूनांपतिम् ।
वन्दे सूर्यशशांकवह्निनयनं वन्दे मुकुन्दप्रियं
वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शंकरम् ॥

तव तत्वं न जानामि कीदृशोऽसि महेश्वर ।
यादृशोऽसि महादेव तादृशाय नमो नमः ॥

ऋषय ऊचुः

सूत वेदार्थतत्वज्ञ शिवध्यानपरायण ।
मुक्त्युपायं वदास्माभ्यं कृपालो मुनिसत्तम ॥ १ ॥
कः सेव्यः सर्वदेवेषु को वा जप्यो मनुः सदा ।
स्थातव्यं कुत्र वा नित्यं  किं वा सर्वार्थसाधकम् ॥ २ ॥

श्रीसूत उवाच

धन्यान्मन्यामहे नूनमनन्यशरणान्मुनीन् ।
वन्याशिनो वनेवासान् न्यस्तमानुष्यकल्मषान् ॥ ३ ॥
भवद्भिः सर्ववेदार्थतत्वं ज्ञातमतन्द्रितैः ।
भवद्भिः सर्ववेदार्थो ज्ञात एवास्ति यद्यपि ॥ ४ ॥
तथापि किञ्चिद्वक्ष्यामि यथा ज्ञातं मया तथा ।
पुरा कैलासशिखरे सुखासीनं जगत्प्रभुम् ॥ ५ ॥
वेदान्तवेद्यमीशानं शंकरं लोकशंकरम् ।
विलोक्यातीव सन्तुष्टः षण्मुखः साम्बमीश्वरम् ॥ ६ ॥

मत्वा कृतार्थमात्मानं प्रणिपत्य सदाशिवम् ।
पप्रच्छ सर्वलोकानां मुक्त्युपायं कृताञ्जलिः ॥ ७ ॥

श्रीस्कन्द उवाच

विश्वेश्वर महादेव विष्णुब्रह्मादिवन्दित ।
देवानां मानवानां च किं मोक्षस्यास्ति साधनम् ॥ ८ ॥
तव नामान्यनन्तानि सन्ति यद्यपि शंकर ।
तथापि तानि दिव्यानि न ज्ञायन्ते मयाधुना ॥ ९ ॥
प्रियाणि शिवनामानि सर्वाणि शिव यद्यपि ।
तथापि कानि रम्याणि तेषु प्रियतमानि ते ॥
तानि सर्वार्थदान्यद्य कृपया वक्तुमर्हसि ॥ १० ॥

श्रीसूत उवाच

कुमारोदीरितां वाचं सर्वलोकहितावहाम् ।
श्रुत्वा प्रसन्नवदनस्तमुवाच सदाशिवः ॥ ११ ॥

श्रीसदाशिव उवाच

साधु साधु महाप्रज्ञ सम्यक्पृष्ठं त्वयाधुना ।
यदिदानीम् त्वयापृष्ठं तद्वक्ष्ये शृणु सादरम् ॥ १२ ॥

एवमेव पुरा गौर्या पृष्ठः काश्यामहं तदा ।
समाख्यातं मया सम्यक्सर्वेषां मोक्षसाधनम् ॥ १३ ॥
दिव्यान्यनन्तनामानि सन्ति तन्मध्यगं परम् ।
अष्टोत्तरसहस्रं तु नाम्नां प्रियतरं मम ॥ १४ ॥
एकैकमेव तन्मध्ये नाम सर्वार्थसाधकम् ।
मयापि नाम्नां सर्वेषां फलं वक्तुं न शक्यते ॥ १५ ॥
तिलाक्षतैर्बिल्वपत्रैः कमलैः कोमलैर्नवैः ।
पूजयिष्यति मां भक्त्या यस्त्वे तन्नामसंख्यया ॥ १६ ॥
स पापेभ्यः संसृतेश्च मुच्यते नात्र संशयः ।
ततो ममान्तिकं याति पुनरावृत्तिदुर्लभम् ॥ १७ ॥
एकैकेनैव नाम्ना मां अर्चयित्वा दृढव्रताः ।
स्वेष्टं फलं प्राप्नुवन्ति सत्यमेवोच्यते मया ॥ १८ ॥
एतन्नामाव लीम् यस्तु पठन्मां प्रणमेत्सदा ।
स याति मम सायुज्यं स्वेष्टं बन्धुसमन्वितः ॥ १९ ॥
स्पृष्ट्वा मल्लिंगममलं एतन्नामानि यः पठेत् ।
स पातकेभ्यः सर्वेभ्यः सत्यमेव प्रमुच्यते ॥ २० ॥

यस्त्वे तन्नामभिः सम्यक् त्रिकालं वत्सरावधि ।
मामर्चयति निर्दम्भः स देवेन्द्रो भविष्यति ॥ २१ ॥
एतन्नामानुसन्धाननिरतः सर्वदामुना ।
मम प्रियकरस्तस्मान्निवसाम्यत्र सादरम् ॥ २२ ॥
तत्पूजया पूजितोऽहं स एवाहं मतो मम ।
तस्मात्प्रियतरं स्थानमन्यन्नैव हि दृश्यते ॥ २३ ॥
हिरण्यबाहुरित्यादिनाम्नां शम्भुरहं ऋषिः ।
देवताप्यहमेवात्र शक्तिर्गौरी मम प्रिया ॥ २४ ॥
महेश एव संसेव्यः सर्वैरिति हि कीलकम् ।
धर्माद्यर्थाः फलं ज्ञेयं फलदायी सदाशिवः ॥ २५ ॥

***

ॐ

सौरमण्डल मध्यस्थं साम्बं संसारभेषजम् ।
नीलग्रीवं विरूपाक्षं नमामि शिवमव्ययम् ॥

## ॥ न्यासः ॥

ॐ अस्य श्रीशिवसहस्रनामस्तोत्र महामन्त्रस्य शम्भु ऋर्षिः ।
अनुष्टुप् छन्दः । परमात्मा श्रीसदाशिवो देवता ।
महेश्वर इति बीजम् । गौरी शक्तिः ।
महेश एव संसेव्यः सर्वैरिति कीलकम् ।
श्रीसाम्बसदाशिवप्रीत्यर्थे मुख्यसहस्रनामजपे विनियोगः ।

## ॥ ध्यानम् ॥

शान्तं पद्मासनस्थं शशिधरमकुटं पञ्चवक्त्रं त्रिणेत्रं
शूलं वज्रं च खड्गं परशुमभयदं दक्षभागे वहन्तम् ।
नागं पाशं च घण्टां वरडमरुयुतं चांकुशं वामभागे
नानालंकारयुक्तं स्फटिकमणिनिभं पार्वतीशं नमामि ॥

| ॐ नमो भगवते रुद्राय |

ॐ हिरण्यबाहुः सेनानी र्दिग्पतिस्तरुराट् हरः ।
हरिकेशः पशुपतिः महान् सस्पिञ्जरो मृडः ॥ १ ॥
विव्याधी बभ्लुशः श्रेष्ठः परमात्मा सनातनः ।
सर्वान्नराट् जगत्कर्ता पुष्टेशो नन्दिकेश्वरः ॥ २ ॥
आततावी महारुद्रः संसारास्त्रः सुरेश्वरः ।
उपवीतिरहन्त्यात्मा क्षेत्रेशो वननायकः ॥ ३ ॥
रोहितः स्थपतिः सूतो वाणिजो मन्त्रिरुन्नतः ।
वृक्षेशो हुतभुग्देवो भुवन्तिर्वारिवस्कृतः ॥ ४ ॥
उच्चैर्घोषो घोररूपः पत्तीशः पाशमोचकः ।
ओषधीशः पञ्चवक्त्रः कृत्स्नवीतो भयानकः ॥ ५ ॥
सहमानः स्वर्णरेताः निव्याधिर्निरुपप्लवः ।
आव्याधिनीशः ककुभो निषंगी स्तेनरक्षकः ॥ ६ ॥
मन्त्रात्मा तस्कराध्यक्षो वञ्चकः परिवञ्चकः ।
अरण्येशः परिचरो निचेरुः स्तायुरक्षकः ॥ ७ ॥
प्रकृन्तेशो गिरिचरः कुलुञ्चेशो गुहेष्टदः ।
भवः शर्वो नीलकण्ठः कपर्दी त्रिपुरान्तकः ॥ ८ ॥

व्युप्तकेशो गिरिशयः सहस्राक्षः सहस्रपात् ।
शिपिविष्टश्चन्द्रमौलिर्ह्रस्वो मीढुष्टमोऽनघः ॥ ९ ॥
वामनो व्यापकः शूली वर्षीयानजडोऽनणुः ।
ऊर्व्यः सूर्म्योऽग्रियः शीभ्यः प्रथमः पावकाकृतिः ॥ १० ॥
आचारस्तारकस्तारोऽवस्वन्योऽनन्तविग्रहः ।
द्वीप्यः स्रोतस्य ईशानो धुर्यो गव्ययनो यमः ॥ ११ ॥
पूर्वजोऽपरजो ज्येष्ठः कनिष्ठो विश्वलोचनः ।
अपगल्भो मध्यमोर्म्यो जघन्यो बुध्नियः प्रभुः ॥ १२ ॥
प्रतिसर्योऽनन्तरूपः सोभ्यो याम्यो सुराश्रयः ।
खल्योर्वर्योऽभयः क्षेम्यः श्लोक्यः पथ्यो नभोऽग्रणीः ॥ १३ ॥
वन्योऽवसान्यः पूतात्मा श्रवः कक्ष्यः प्रतिश्रवः ।
आशुषेणो महासेनो महावीरो महारथः ॥ १४ ॥
शूरोऽतिघातको वर्मी वरूथी बिल्मिरुद्यतः ।
श्रुतसेनः श्रुतः साक्षी कवची वशकृद्वशी ॥ १५ ॥
आहनन्योऽनन्यनाथो दुन्दुभ्योऽरिष्टनाशकः ।
धृष्णुः प्रमृश इत्यात्मा वदान्यो वेदसम्मतः ॥ १६ ॥

तीक्ष्णेषुपाणिः प्रहितः स्वायुधः शस्त्रवित्तमः ।

सुधन्वा सुप्रसन्नात्मा विश्ववक्त्रः सदागतिः ॥ १७ ॥

स्रुत्यः पथ्यो विश्वबाहुः काट्यो नीप्यो शुचिस्मितः ।

सूद्यः सरस्यो वैशन्तो नाद्यः कूप्यो ऋषिर्मनुः ॥ १८ ॥

सर्वो वर्ष्यो वर्षरूपः कुमारः कुशलोऽमलः ।

मेघ्योऽवर्ष्योऽमोघशक्तिः विद्युत्योऽमोघविक्रमः ॥ १९ ॥

दुरासदो दुराराध्यो निर्द्वन्द्वो दुःसहर्षभः ।

ईध्रियः क्रोधशमनो जातुकर्णः पुरुष्टुतः ॥ २० ॥

आतप्यो वायुरजरो वात्यः कात्यायनीप्रियः ।

वास्तव्यो वास्तुपो रेष्म्यो विश्वमूर्धा वसुप्रदः ॥ २१ ॥

सोमस्ताम्रोऽरुणः शंगः रुद्रः सुखकरः सुकृत् ।

उग्रोऽनुग्रो भीमकर्मा भीमो भीमपराक्रमः ॥ २२ ॥

अग्रेवधो हनीयात्मा हन्ता दूरेवधो वधः ।

शम्भुर्मयोभवो नित्यः शंकरः कीर्तिसागरः ॥ २३ ॥

मयस्करः शिव तरः खण्डपर्शुरजः शुचिः ।

तीर्थ्यः कूल्योऽमृताधीशः पार्योऽवार्योऽमृताकरः ॥ २४ ॥

शुद्धः प्रतरणो  मुख्यः शुद्धपाणिरलोलुपः ।
उच्च उत्तरण स्तार्य स्तार्यज्ञ स्तार्य हृद्गतिः ॥ २५ ॥
आतार्यः सारभूतात्मा सारग्राही दुरत्ययः ।
आलाद्यो मोक्षदः पथ्यो ऽ नर्थहा सत्यसंगरः ॥ २६ ॥
शष्प्यः फेन्यः प्रवाह्योढा सिकत्यः सैकताश्रयः ।
इरिण्यो ग्रामणीः पुण्यः शरण्यः शुद्धशासनः ॥ २७ ॥
वरेण्यो यज्ञपुरुषो यज्ञेशो यज्ञनायकः ।
यज्ञकर्ता यज्ञभोक्ता यज्ञविघ्नविनाशकः ॥ २८ ॥
यज्ञकर्मफलाध्यक्षो यज्ञमूर्तिरनातुरः ।
प्रपथ्यः किंशिलो गेह्यो गृह्यस्तल्प्यो धनाकरः ॥ २९ ॥
पुलस्त्यः क्षयणो गोष्ठ्यो गोविन्दो गीतसत्क्रियः ।
ह्रदय्यो हृद्यकृत् हृद्यो गह्व रेष्ठः प्रभाकरः ॥ ३० ॥
निवेष्प्यो नियतो ऽ यन्ता पांसव्यः संप्रतापनः ।
शुष्क्यो हरित्यो ऽ पूतात्मा  रजस्यः सात्विकप्रियः ॥ ३१ ॥
लोप्योलप्यः पर्णशद्यः पर्ण्यः पूर्णः पुरातनः ।
भूतो भूतपति र्भूपो भूधरो भूधरायुधः ॥ ३२ ॥

भूतसंघो भूतमूर्तिर्भूतहा भूतिभूषणः ।
मदनो मादको माद्यो मदहा मधुरप्रियः ॥ ३३ ॥
मधुर्मधुकरः क्रूरो मधुरो मदनान्तकः ।
निरञ्जनो निराधारो निर्लुप्तो निरुपाधिकः ॥ ३४ ॥
निष्प्रपञ्चो निराकारो निरीहो निरुपद्रवः ।
सत्त्वः सत्त्वगुणोपेतः सत्त्ववित् सत्त्ववित्प्रियः ॥ ३५ ॥
सत्त्वनिष्ठः सत्त्वमूर्तिः सत्त्वेशः सत्त्ववित्तमः ।
समस्तजगदाधारः समस्तगुणसागरः ॥ ३६ ॥
समस्तदुःखविध्वंसी समस्तानन्दकारणः ।
रुद्राक्षमालाभरणो रुद्राक्षप्रियवत्सलः ॥ ३७ ॥
रुद्राक्षवक्षा रुद्राक्षरूपो रुद्राक्षपक्षकः ।
विश्वेश्वरो वीरभद्रः सम्राट् दक्षमखान्तकः ॥ ३८ ॥
विघ्नेश्वरो विघ्नकर्ता गुरुर्देवशिखामणिः ।
भुजगेन्द्रलसत्कण्ठो भुजंगाभरणप्रियः ॥ ३९ ॥
भुजंगविलसत्कर्णो भुजंगवलयावृतः ।
मुनिवन्द्यो मुनिश्रेष्ठो मुनिवृन्दनिषेवितः ॥ ४० ॥

मुनिहृत्पुण्डरीकस्थो मुनिसंघैकजीवनः ।
मुनिमृग्यो वेदमृग्यो मृगहस्तो मुनीश्वरः ॥ ४१ ॥
मृगेन्द्र चर्मवसनो नरसिंहनिपातनः ।
मृत्युञ्जयो मृत्युमृत्युरपमृत्युविनाशकः ॥ ४२ ॥
दुष्टमृत्युरदुष्टेष्ठः मृत्युहा मृत्युपूजितः ।
ऊर्ध्वो हिरण्यः परमो निधनेशो धनाधिपः ॥ ४३ ॥
यजुर्मूर्तिः साममूर्तिः ऋङ्मूर्तिर्मूर्तिवर्जितः ।
व्यक्तो व्यक्ततमोऽव्यक्तो व्यक्ताव्यक्तस्तमो जवी ॥ ४४ ॥
लिंगमूर्तिरलिंगात्मा लिंगालिंगात्म विग्रहः ।
ग्रहग्रहो ग्रहाधारो ग्रहाकारो ग्रहेश्वरः ॥ ४५ ॥
ग्रहकृद्ग्रहभिद्ग्राही ग्रहो ग्रहविलक्षणः ।
कल्पाकारः कल्पकर्ता कल्पलक्षणतत्परः ॥ ४६ ॥
कल्पो कल्पाकृतिः कल्पनाशकः कल्पकल्पकः ।
परमात्मा प्रधानात्मा प्रधानपुरुषः शिवः ॥ ४७ ॥
वेद्यो वैद्यो वेदवेद्यो वेदवेदान्तसंस्तुतः ।
वेदवक्त्रो वेदजिह्वो विजिह्वो जिह्मनाशकः ॥ ४८ ॥

कल्याणरूपः कल्याणः कल्याणगुणसंश्रयः ।

भक्तकल्याणदो भक्तकामधेनुः सुराधिपः ॥ ४९ ॥

पावनः पावको वामो महाकालो मदापहः ।

घोरपातकदावाग्निर्दवभस्मकणप्रियः ॥ ५० ॥

अनन्तसोमसूर्याग्निमण्डलप्रतिमप्रभः ।

जगदेकप्रभुःस्वामी जगद्वन्द्यो जगन्मयः ॥ ५१ ॥

जगदानन्ददो जन्मजरामरणवर्जितः ।

खट्वांगी नीतिमान् सत्यो देवतात्मात्मसम्भवः ॥ ५२ ॥

कपालमालाभरणः कपाली विष्णुवल्लभः ।

कमलासनकालाग्निः कमलासनपूजितः ॥ ५३ ॥

कालाधीशस्त्रिकालज्ञो दुष्टविग्रहवारकः ।

नाट्यकर्ता नटपरो महानाट्यविशारदः ॥ ५४ ॥

विराट् रूपधरो धीरो वीरो वृषभवाहनः ।

वृषांको वृषभाधीशो वृषात्मा वृषभध्वजः ॥ ५५ ॥

महोन्नतो महाकायो महावक्षा महाभुजः ।

महास्कन्धो महाग्रीवो महावक्त्रो महाशिराः ॥ ५६ ॥

महाहनुर्महादंष्ट्रो महदोष्ठो महोदरः ।
सुन्दरभ्रूः सुनयनः सुललाटः सुकन्दरः ॥ ५७ ॥
सत्यवाक्यो धर्मवेत्ता सत्यज्ञः सत्यवित्तमः ।
धर्मवान्धर्मनिपुणो धर्मो धर्मप्रवर्तकः ॥ ५८ ॥
कृतज्ञः कृतकृत्यात्मा कृतकृत्यः कृतागमः ।
कृत्यवि त् कृत्यविच्छ्रेष्ठः कृतज्ञप्रियकृत्तमः ॥ ५९ ॥
व्रतकृद् व्रतविच्छ्रेष्ठो व्रतविद्वान् महा व्र ती ।
व्रतप्रियो व्रताधारो व्रताकारो व्रतेश्वरः ॥ ६० ॥
अतिरागी वीतरागी रागहेतुर्विरागवित् ।
रागघ्नो रागशमनो रागदो रागिरागवित् ॥ ६१ ॥
विद्वान् विद्वत्तमो विद्वज्जनमानससंश्रयः ।
विद्वज्जनाश्रयो विद्वज्जनस्तव्यपराक्रमः ॥ ६२ ॥
नीतिकृन्नीतिविन्नीतिप्रदाता नीतिवित्प्रियः ।
विनीतवत्सलो नीतिस्वरूपो नीतिसंश्रयः ॥ ६३ ॥
क्रोधवित् क्रोधकृत् क्रोधिजनकृत् क्रोधरूपधृक् ।
सक्रोधः क्रोधहा क्रोधिजनहा क्रोधकारणः ॥ ६४ ॥

गुणवान् गुणविच्छ्रेष्ठो निर्गुणो गुणवित्प्रियः ।

गुणाधारो गुणाकारो गुणकृद् गुणनाशकः ॥ ६५ ॥

वीर्यवान् वीर्यविच्छ्रेष्ठो वीर्यविद्वीर्यसंश्रयः ।

वीर्याकारो वीर्यकरो वीर्यहा वीर्यवर्धकः ॥ ६६ ॥

कालवित्कालकृत्कालो बलकृद् बलविद्बली ।

मनोन्मनो मनोरूपो बलप्रमथनो बलः ॥ ६७ ॥

विद्याप्रदाता विद्येशो विद्यामात्रैकसंश्रयः ।

विद्याकारो महाविद्यो विद्याविद्यो विशारदः ॥ ६८ ॥

वसन्तकृद्वसन्तात्मा वसन्तेशो वसन्तदः ।

ग्रीष्मात्मा ग्रीष्मकृद् ग्रीष्मवर्धको ग्रीष्मनाशकः ॥ ६९ ॥

प्रावृट् कृत् प्रावृडाकारः प्रावृट्कालप्रवर्तकः ।

प्रावृट् प्रवर्धकः प्रावृण्णाथः प्रावृड्विनाशकः ॥ ७० ॥

शरदात्मा शरद् हेतुः  शरत्कालप्रवर्तकः ।

शरन्नाथः शरत्कालनाशकः शरदाश्रयः ॥ ७१ ॥

हिमस्वरूपो हिमदो हिमहा हिमनायकः ।

शैशिरात्मा शैशिरेशः शैशिरर्तुप्रवर्तकः ॥ ७२ ॥

प्राच्यात्मा दक्षिणाकारः प्रतीच्यात्मोत्तराकृतिः ।
आग्नेयात्मा निर्ऋतीशो वायव्यात्मेशनायकः ॥ ७३ ॥
ऊर्ध्वाधः सुदिगाकारो नानादेशैकनायकः ।
सर्वपक्षिमृगाकारः सर्वपक्षिमृगाधिपः ॥ ७४ ॥
सर्वपक्षिमृगाधारो मृगाद्युत्पत्तिकारणः ।
जीवाध्यक्षो जीववन्द्यो जीवविज्जीवरक्षकः ॥ ७५ ॥
जीवकृज्जीवहा जीवजीवनो जीवसंश्रयः ।
ज्योतिःस्वरूपो विश्वात्मा विश्वनाथो वियत्पतिः ॥ ७६ ॥
वज्रात्मा वज्रहस्तात्मा वज्रेशो वज्रभूषितः ।
कुमारगुरुरीशानो गणाध्यक्षो गणाधिपः ॥ ७७ ॥
पिनाकपाणिः सूर्यात्मा सोमसूर्याग्निलोचनः ।
अपायरहितः शान्तो दान्तो दमयिता दमः ॥ ७८ ॥
ऋषिः पुराणपुरुषः पुरुषेशः पुरन्दरः ।
कालाग्निरुद्रः सर्वेशः शमरूपो शमेश्वरः ॥ ७९ ॥
प्रलयानलकृद् दिव्यः प्रलयानलनाशकः ।
त्रियम्बको ऽरिषड्वर्गनाशको धनदप्रियः ॥ ८० ॥

अक्षोभ्यः क्षोभरहितः क्षोभदः क्षोभनाशकः ।

सदम्भो दम्भरहितो दम्भदो दम्भनाशकः ॥ ८१ ॥

कुन्देन्दुशंखधवलो भस्मोद्धूलितविग्रहः ।

भस्मधारणहृष्टात्मा तुष्टिः पु ष्ट्यरिसूदनः ॥ ८२ ॥

स्थाणुर्दिगम्बरो भर्गो भगनेत्रभिदुद्यमः ।

त्रिकाग्निः कालकालाग्निरद्वितीयो महायशाः ॥ ८३ ॥

सामप्रियः सामवेत्ता सामगः सामगप्रियः ।

धीरोदात्तो महाधीरो धैर्यदो धैर्यवर्धकः ॥ ८४ ॥

लावण्यराशिः सर्वज्ञः सुबुद्धिर्बुद्धिमान्वरः ।

तुम्बवीणः कम्बुकण्ठः शम्बरारिनिकृन्तनः ॥ ८५ ॥

शार्दूलचर्मवसनः पूर्णानन्दो जगत्प्रियः ।

जयप्रदो जयाध्यक्षो जयात्मा जयकारणः ॥ ८६ ॥

जंगमाजंगमाकारो जगदु त्पत्तिकारणः ।

जगद्र क्षाकरो वश्यो जगत् प्रलयकारणः ॥ ८७ ॥

पूषदन्तभिदुत्कृष्टः पञ्चयज्ञः प्रभञ्जकः ।

अष्टमूर्तिर्विश्वमूर्तिरतिमूर्तिरमूर्तिमान् ॥ ८८ ॥

कैलासशिखरावासः कैलासशिखरप्रियः ।
भक्तकैलासदः सूक्ष्मो मर्मज्ञो सर्वशिक्षकः ॥ ८९ ॥
सोमः सोमकलाकारो महातेजा महातपाः ।
हिरण्य श्म श्रु रानन्दः स्वर्णकेशः सुवर्णदृक् ॥ ९० ॥
ब्रह्मा विश्वसृगुर्वीशो मोचको बन्धवर्जितः ।
स्वतन्त्रः सर्वमन्त्रात्मा द्युतिमानमितप्रभः ॥ ९१ ॥
पुष्कराक्षः पुण्यकीर्तिः पुण्यश्रवणकीर्तनः ।
पुण्यमूर्तिः पुण्यदाता पुण्यापुण्यफलप्रदः ॥ ९२ ॥
सारभूतः स्वरमयो रसभूतो रसाश्रयः ।
ओंकारः प्रणवो नादो प्रणतार्तिप्रभञ्जनः ॥ ९३ ॥
निकटस्थोऽतिदूरस्थो वशी ब्रह्माण्डनायकः ।
मन्दारमूलनिलयो मन्दारकुसुमावृतः ॥ ९४ ॥
वृन्दारकप्रियतमो वृन्दारकवरार्चितः ।
श्रीमाननन्तकल्याणपरिपूर्णो महोदयः ॥ ९५ ॥
महोत्साहो विश्वभोक्ता विश्वाशापरिपूरकः ।
सुलभोऽसुलभो लभ्योऽलभ्यो लाभप्रवर्धकः ॥ ९६ ॥

लाभात्मा लाभदो वक्ता द्युतिमाननसूयकः ।
ब्रह्मचारी दृढाचारी देवसिंहो धनप्रियः ॥ ९७ ॥
वेदपो देवदेवेशो देवदेवोत्तमोत्तमः ।
बीजराजो बीजहेतुर्बीजदो बीजवृद्धिदः ॥ ९८ ॥
बीजाधारो बीजरूपो निर्बीजो बीजनाशकः ।
परापरेशो वरदः पिंगलोऽयुग्मलोचनः ॥ ९९ ॥
पिंगलाक्षः सुरगुरुः गुरुः सुरगुरुप्रियः ।
युगावहो युगाधीशो युगकृद्युगनाशकः ॥ १०० ॥
कर्पूरगौरो गौरीशो गौरीगुरुगुहाश्रयः ।
धूर्जटिः पिंगलजटो जटामण्डलमण्डितः ॥ १०१ ॥
मनोजवो जीवहेतुरन्धकासुरसूदनः ।
लोकबन्धुः कलाधारः पाण्डुरः प्रमथाधिपः ॥ १०२ ॥
अव्यक्तलक्षणो योगी योगीशो योगपुंगवः ।
श्रितावासो जनावासो सुरावासः सुमण्डलः ॥ १०३ ॥
भववैद्यो योगिवैद्यो योगिसिंहहृदासनः ।
उत्तमोऽनुत्तमोऽशक्तः कालकण्ठो विषादनः ॥ १०४ ॥

आशास्यः कमनीयात्मा शुभः सुन्दरविग्रहः ।
भक्तकल्पतरुः स्तोता स्तव्यः स्तोत्रवरप्रियः ॥१०५॥
अप्रमेयगुणाधारो वेदकृद्वेदविग्रहः ।
कीर्त्याधारः कीर्तिकरः कीर्तिहेतुरहेतुकः ॥१०६॥
अप्रधृष्यः शान्तभद्रः कीर्तिस्तम्भो मनोमयः ।
भूशयोऽन्नमयोऽभोक्ता महेष्वासो महीतनुः ॥१०७॥
विज्ञानमय आनन्दमयः प्राणमयोऽन्नदः ।
सर्वलोकमयो यष्टा धर्माधर्मप्रवर्तकः ॥१०८॥
अनिर्विण्णो गुणग्राही सर्वधर्मफलप्रदः ।
दयासुधार्द्रनयनो निराशीरपरिग्रहः ॥१०९॥
परार्थवृत्तिर्मधुरो मधुरप्रियदर्शनः ।
मुक्तादामपरीतांगो निःसंगो मंगलाकरः ॥११०॥
सुखप्रदः सुखाकारः सुखदुःखविवर्जितः ।
विशृंखलो जगत्कर्ता जितसर्वः पितामहः ॥१११॥
अनपायोऽक्षयो मुण्डी सुरूपो रूपवर्जितः ।
अतीन्द्रियो महामायो मायावी विगतज्वरः ॥११२॥

अमृतः शाश्वतः शान्तो  मृत्युहा मूकनाशनः ।

महाप्रेतासनासीनः पिशाचानुचरावृतः ॥ ११३ ॥

गौरीविलाससदनो नानागानविशारदः ।

विचित्रमाल्यवसनो  दिव्यचन्दनचर्चितः ॥ ११४ ॥

विष्णुब्रह्मादिवन्द्यांघ्रिः सुरासुरनमस्कृतः ।

किरीट लेढिफालेन्दुर्मणिकंकणभूषितः ॥ ११५ ॥

रत्नांगदांगो  रत्नेशो  रत्नरञ्जितपादुकः ।

नवरत्नगणोपेतकिरीटी रत्नकञ्चुकः ॥ ११६ ॥

नानाविधानेकरत्नलसत्कुण्डलमण्डितः ।

दिव्यरत्नगणाकीर्णकण्ठाभरणभूषितः ॥ ११७ ॥

गलव्यालमणिर्नासापुटभ्राजितमौक्तिकः ।

रत्नांगुलीयविलसत्करशाखानख प्रभः ॥ ११८ ॥

रत्नभ्राजद्धेमसूत्रलसत्कटितटः पटुः ।

वामांकभागविलसत्पार्वतीवीक्षणप्रियः ॥ ११९ ॥

लीलावलम्बितवपुर्भक्तमानसमन्दिरः ।

मन्दमन्दारपुष्पौघलसद्वायुनिषेवितः ॥ १२० ॥

कस्तूरीविलसत्फालो दिव्यवेषविराजितः ।

दिव्यदेहप्रभाकूटसन्दीपितदिगन्तरः ॥ १२१ ॥

देवासुरगुरुस्तव्यो देवासुरनमस्कृतः ।

हस्तराजत्पुण्डरीकः पुण्डरीकनिभेक्षणः ॥ १२२ ॥

सर्वाशास्यगुणोऽमेयः सर्वलोकेष्टभूषणः ।

सर्वेष्टदाता सर्वेष्टः स्फुरन्मंगलविग्रहः ॥ १२३ ॥

अविद्यालेशरहितो नानाविद्यैकसंश्रयः ।

मूर्तिभवः कृपापूरो भक्तेष्टफलपूरकः ॥ १२४ ॥

सम्पूर्णकामः सौभाग्यनिधिः सौभाग्यदायकः ।

हितैषी हितकृत्सौम्यः परार्थैकप्रयोजनः ॥ १२५ ॥

शरणागतदीनार्तपरित्राणपरायणः ।

जिष्णुर्नेता वषट्कारो भ्राजिष्णुर्भोजनं हविः ॥ १२६ ॥

भोक्ता भोजयिता जेता जितारिर्जितमानसः ।

अक्षरः कारणं क्रुद्धसमरः शारदप्लवः ॥ १२७ ॥

आज्ञापकेच्छो गम्भीरः कविर्दुःस्वप्ननाशकः ।

पञ्चब्रह्मसमुत्पत्तिः क्षेत्रज्ञः क्षेत्रपालकः ॥ १२८ ॥

व्योमकेशो भीमवेषो गौरीपतिरनामयः ।
भवाब्धितरणोपायो भगवान् भक्तवत्सलः ॥ १२९ ॥
वरो वरिष्ठो नेदिष्ठः प्रियः प्रियदवः सुधीः ।
यन्ता यविष्ठः क्षोदिष्ठो स्थविष्ठो यमशासकः ॥ १३० ॥
हिरण्यगर्भो हेमांगो हेमरूपो हिरण्यदः ।
ब्रह्मज्योतिरनावेक्ष्यश्चामुण्डाजनको रविः ॥ १३१ ॥
मोक्षार्थिजनसंसेव्यो मोक्षदो मोक्षनायकः ।
महाश्मशाननिलयो वेदाश्वो भूरथः स्थिरः ॥ १३२ ॥
मृगव्याधो चर्मधामा प्रच्छन्नः स्फटिकप्रभः ।
सर्वज्ञः परमार्थात्मा ब्रह्मानन्दाश्रयो विभुः ॥ १३३ ॥
महेश्वरो महादेवः परब्रह्म सदाशिवः ॥ १३४ ॥

। श्री परब्रह्म सदाशिव ॐ नम इति ।

# उत्तर पीठिका

एवमेतानि नामानि मुख्यानि मम षण्मुख ।

शुभदानि विचित्राणि गौर्यै प्रोक्तानि सादरम् ॥ १ ॥

विभूतिभूषितवपुः शुद्धो रुद्राक्षभूषणः ।

शिवलिंगसमीपस्थो निस्संगो निर्जितासनः ॥ २ ॥

एकाग्रचित्तो नियतो वशी भूतहितेरतः ।

शिवलिंगार्चको नित्यं शिवैकशरणः सदा ॥ ३ ॥

मम नामानि दिव्यानि यो जपेद्भक्तिपूर्वकम् ।

एवमुक्तगुणोपेतः स देवैः पूजितो भवेत् ॥ ४ ॥

संसारपाशसम्बद्धजनमोक्षैकसाधनम् ।

मन्नामस्मरणं नूनं तदेव सकलार्थदम् ॥ ५ ॥

मन्नामैव परं जप्यमहमेवाक्षयार्थदः ।

अहमेव सदासेव्यो ध्येयो मुक्त्यर्थमादरात् ॥ ६ ॥

विभूतिवज्रकवचैः मन्नामशरपाणिभिः ।

विजयःसर्व तो लभ्यो न तेषां दृश्यते भयम् ॥ ७ ॥

। न तेषां दृश्यते भयम् ॐ नम इति ।

श्रीसूत उवाच

इत्युदीरितमाकर्ण्य महादेवेन तद्वचः ।

सन्तुष्टः षण्मुखः शम्भुं तुष्टाव गिरिजासुतः ॥ ८ ॥

श्रीस्कन्द उवाच

नमस्ते नमस्ते महादेवशम्भो

नमस्ते नमस्ते प्रपन्नैकबन्धो ।

नमस्ते नमस्ते दयासारसिन्धो

नमस्ते नमस्ते नमस्ते महेश ॥ ९ ॥

नमस्ते नमस्ते महामृत्युहारिन्

नमस्ते नमस्ते महादुःखहारिन् ।

नमस्ते नमस्ते महापापहारिन्

नमस्ते नमस्ते नमस्ते महेश ॥ १० ॥

नमस्ते नमस्ते सदाचन्द्रमौले

नमस्ते नमस्ते सदाशूलपाणे ।

नमस्ते नमस्ते सदोमैकजाने

नमस्ते नमस्ते नमस्ते महेश ॥ ११ ॥

वेदान्तवेद्याय महादयाय

कैलासवासाय शिवाधवाय ।

शिवस्वरूपाय सदाशिवाय

शिवासमेताय नमःशिवाय ॥ १२ ॥

। नमःशिवाय इति ।

श्रीसूत उवाच

इति स्तुत्वा महादेवं सर्वव्यापिनमीश्वरम् ।

पुनःप्रणम्याथ ततः स्कन्दस्तस्थौ कृताञ्जलिः ॥ १३ ॥

भवन्तो ऽपि मुनिश्रेष्ठाः साम्बध्यानपरायणाः ।

शिवनामजपं कृत्वा तिष्ठन्तु सुखिनः सदा ॥ १४ ॥

शिव एव सदा ध्येयः सर्वदेवोत्तमः प्रभुः ।

शिव एव सदा पूज्यो मुक्तिकामैर्न संशयः ॥ १५ ॥

महेशान्नाधिको देवः स एव सुरसत्तमः ।

स एव सर्ववेदान्तवेद्यो नात्रास्ति संशयः ॥ १६ ॥

जन्मान्तरसहस्रेषु यदि तप्तं तपस्तदा ।
तस्य श्रद्धा महादेवे भक्तिश्च भवति ध्रुवम् ॥ १७ ॥
सुभगा जननी तस्य तस्यैव कुलमुन्नतम् ।
तस्यैव जन्म सफलं यस्य भक्तिः सदाशिवे ॥ १८ ॥
ये शम्भुं सुरसत्तमं सुरगणैराराध्यमीशं शिवं
शैलाधीशसुतासमेतममलं संपूजयन्त्यादरात् ।
ते धन्याः शिवपादपूजनपराः ह्यन्यो न धन्यो जनः
सत्यं सत्यमिहोच्यते मुनिवराः सत्यं पुनः सर्वथा ॥ १९ ॥

। सत्यं पुनः सर्वथा ॐ नम इति ।

नमः शिवाय साम्बाय सगणाय ससूनवे ।
प्रधानपुरुषेशाय सर्गस्थित्यन्तहेतवे ॥ २० ॥
नमस्ते गिरिजानाथ भक्तानामिष्टदायक ।
देहि भक्तिं त्वयीशान सर्वाभीष्टं च देहि मे ॥ २१ ॥
साम्ब शम्भो महादेव दयासागर शंकर ।
मच्चित्तभ्रमरो नित्यं तवास्तु पदपंकजे ॥ २२ ॥

सर्वार्थ शर्व सर्वेश सर्वोत्तम महेश्वर ।
तव नामामृतं दिव्यं जिह्वाग्रे मम तिष्ठतु ॥ २३ ॥
यदक्षरं पदं भ्रष्टं मात्राहीनं च यद् भवे त् ।
तत्सर्वम् क्षम्यतां देव प्रसीद परमेश्वर ॥२४ ॥
करचरणकृतं वाक्कायजं कर्मजं वा
श्रवणनयनजं वा मानसं वा ऽ पराधम् ।
विहितमविहितं वा सर्वमेतत् क्षमस्व
जयजय करुणाब्धे श्रीमहादेव शम्भो ॥ २५ ॥
कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्या ऽऽ त्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत् सकलं  परस्मै
सदाशिवायेति समर्पयामि ॥ २६ ॥

॥ ॐ तत्सत् इति
श्री मुख्य शिवसहस्रनाम स्तोत्रम् संपूर्णम् ॥

# श्री शिव सहस्रनामावली

(ॐ + नामम् + नमः )

१. हिरण्यबाहवे
२. सेनानये
३. दिग्पतये
४. तरुराजे
५. हराय
६. हरिकेशाय
७. पशुपतये
८. महते
९. सस्पिञ्जराय
१०. मृडाय ॥ १ ॥
११. विव्याधिने
१२. बभ्लुशाय
१३. श्रेष्ठाय
१४. परमात्मने सनातनाय
१५. सर्वान्नराजे
१६. जगत्कर्त्रे
१७. पुष्टेशाय
१८. नन्दिकेश्वराय ॥ २ ॥
१९. आततताविने
२०. महारुद्राय
२१. संसारास्त्राय
२२. सुरेश्वराय
२३. उपवीतये
२४. अहन्त्यात्मने
२५. क्षेत्रेशाय
२६. वननायकाय ॥ ३ ॥

२७. रोहिताय
२८. स्थपतये
२९. सूताय
३०. वाणिजाय
३१. मन्त्रिणे
३२. उन्नताय
३३. वृक्षेशाय
३४. हुतभुजे
३५. देवाय
३६. भुवन्तये
३७. वारिवस्कृताय ॥ ४ ॥
३८. उच्चैर्घोषाय
३९. घोररूपाय
४०. पत्तीशाय
४१. पाशमोचकाय
४२. ओषधीशाय
४३. पञ्चवक्त्राय
४४. कृत्स्नवीताय
४५. भयानकाय ॥ ५ ॥
४६. सहमानाय
४७. स्वर्णरेतसे
४८. निव्याधये
४९. निरुपप्लवाय
५०. आव्याधिनीशाय
५१. ककुभाय
५२. निषंगिणे
५३. स्तेनरक्षकाय ॥ ६ ॥
५४. मन्त्रात्मने
५५. तस्कराध्यक्षाय
५६. वञ्चकाय
५७. परिवञ्चकाय
५८. अरण्येशाय

५९. परिचराय
६०. निचेरवे
६१. स्तायुरक्षकाय ॥ ७ ॥
६२. प्रकृन्तेशाय
६३. गिरिचराय
६४. कुलुञ्चेशाय
६५. गुहेष्टदाय
६६. भवाय
६७. शर्वाय
६८. नीलकण्ठाय
६९. कपर्दिने
७०. त्रिपुरान्तकाय ॥ ८ ॥
७१. व्युप्तकेशाय
७२. गिरिशयाय
७३. सहस्राक्षाय
७४. सहस्रपदे
७५. शिपिविष्टाय
७६. चन्द्रमौलये
७७. ह्रस्वाय
७८. मीढुष्टमाय
७९. अनघाय ॥ ९ ॥
८०. वामनाय
८१. व्यापकाय
८२. शूलिने
८३. वर्षीयसे
८४. अजडाय
८५. अनणवे
८६. ऊर्व्याय
८७. सूर्म्याय
८८. अग्रियाय
८९. शीभ्याय
९०. प्रथमाय

९१. पावकाकृतये ॥१०॥
९२. आचाराय
९३. तारकाय
९४. ताराय
९५. अवस्वन्याय
९६. अनन्तविग्रहाय
९७. द्वीप्याय
९८. स्रोतस्याय
९९. ईशानाय
१००. धुर्याय
१०१. गव्ययनाय
१०२. यमाय ॥११॥
१०३. पूर्वजोय
१०४. अपरजाय
१०५. ज्येष्ठाय
१०६. कनिष्ठाय
१०७. विश्वलोचनाय
१०८. अपगल्भाय
१०९. मध्यमाय
११०. ऊर्म्याय
१११. जघन्याय
११२. बुध्नियाय
११३. प्रभवे ॥१२॥
११४. प्रतिसर्याय
११५. अनन्तरूपाय
११६. सोभ्याय
११७. याम्याय
११८. सुराश्रयाय
११९. खल्याय
१२०. उर्वर्याय
१२१. अभयाय
१२२. क्षेम्याय

१२३. श्लोक्याय

१२४. पथ्याय नभसे

१२५. अग्रण्ये ॥ १३ ॥

१२६. वन्याय

१२७. अवसान्याय

१२८. पूतात्मने

१२९. श्रवाय

१३०. कक्ष्याय

१३१. प्रतिश्रवाय

१३२. आशुषेणाय

१३३. महासेनाय

१३४. महावीराय

१३५. महारथाय ॥ १४ ॥

१३६. शूराय

१३७. अतिघातकाय

१३८. वर्मिणे

१३९. वरूथिने

१४०. बिल्मिने

१४१. उद्यताय

१४२. श्रुतसेनाय

१४३. श्रुताय

१४४. साक्षिणे

१४५. कवचिने

१४६. वशकृते वशिने ॥ १५ ॥

१४७. आहनन्याय

१४८. अनन्यनाथाय

१४९. दुन्दुभ्याय

१५०. अरिष्टनाशकाय

१५१. धृष्णवे

१५२. प्रमृशाय

१५३. इत्यात्मने

१५४. वदान्याय

१५५. वेदसम्मताय ॥१६॥

१५६. तीक्ष्णेषुपाणये

१५७. प्रहिताय

१५८. स्वायुधाय

१५९. शस्त्रवित्तमाय

१६०. सुधन्वने

१६१. सुप्रसन्नात्मने

१६२. विश्ववक्त्राय

१६३. सदागतये ॥१७॥

१६४. स्रुत्याय

१६५. पथ्याय

१६६. विश्वबाहवे

१६७. काट्याय

१६८. नीप्याय

१६९. शुचिस्मिताय

१७०. सूद्याय

१७१. सरस्याय

१७२. वैशन्ताय

१७३. नाद्याय

१७४. कूप्याय

१७५. ऋषये

१७६. मनवे ॥१८॥

१७७. सर्वस्मै

१७८. वर्ष्याय

१७९. वर्षरूपाय

१८०. कुमाराय

१८१. कुशलाय

१८२. अमलाय

१८३. मेघ्याय

१८४. अवर्ष्याय

१८५. अमोघशक्तये

१८६. विद्युत्याय

१८७. अमोघविक्रमाय ॥ १९ ॥
१८८. दुरासदाय
१८९. दुराराध्याय
१९०. निर्द्वन्द्वाय
१९१. दुःसहर्षभाय
१९२. ईध्रियाय
१९३. क्रोधशमनाय
१९४. जातुकर्णाय
१९५. पुरुष्टुताय ॥ २० ॥
१९६. आतप्याय
१९७. वायवे
१९८. अजराय
१९९. वात्याय
२००. कात्यायनीप्रियाय
२०१. वास्तव्याय
२०२. वास्तुपाय
२०३. रेष्म्याय
२०४. विश्वमूर्ध्ने
२०५. वसुप्रदाय ॥ २१ ॥
२०६. सोमाय
२०७. ताम्राय
२०८. अरुणाय
२०९. शंगाय
२१०. रुद्राय
२११. सुखकराय
२१२. सुकृते
२१३. उग्राय
२१४. अनुग्राय
२१५. भीमकर्मणे
२१६. भीमाय
२१७. भीमपराक्रमाय ॥ २२ ॥
२१८. अग्रेवधाय

२१९. हनीयात्मने
२२०. हन्त्रे
२२१. दूरेवधाय
२२२. वधाय
२२३. शम्भवे
२२४. मयोभवाय
२२५. नित्याय
२२६. शंकराय
२२७. कीर्तिसागराय || २३ ||
२२८. मयस्कराय
२२९. शिव तराय
२३०. खण्डपर्शवे
२३१. अजाय
२३२. शुचये
२३३. तीर्थ्याय
२३४. कूल्याय
२३५. अमृताधीशाय
२३६. पार्याय
२३७. अवार्याय
२३८. अमृताकराय || २४ ||
२३९. शुद्धाय
२४०. प्रतरणाय
२४१. मुख्याय
२४२. शुद्धपाणये
२४३. अलोलुपाय
२४४. उच्चाय
२४५. उत्तरणाय
२४६. तार्याय
२४७. तार्यज्ञाय
२४८. तार्य हृद्गतये || २५ ||
२४९. आतार्याय
२५०. सारभूतात्मने

२५१. सारग्राहिणे
२५२. दुरत्ययाय
२५३. आलाद्याय
२५४. मोक्षदाय पथ्याय
२५५. अनर्थघ्ने
२५६. सत्यसंगराय ॥ २६ ॥
२५७. शष्प्याय
२५८. फेन्याय
२५९. प्रवाह्याय
२६०. ऊढायै
२६१. सिकत्याय
२६२. सैकताश्रयाय
२६३. इरिण्याय
२६४. ग्रामण्ये
२६५. पुण्याय
२६६. शरण्याय
२६७. शुद्धशासनाय ॥ २७ ॥
२६८. वरेण्याय
२६९. यज्ञपुरुषाय
२७०. यज्ञेशाय
२७१. यज्ञनायकाय
२७२. यज्ञकर्त्रे
२७३. यज्ञभोक्त्रे
२७४. यज्ञविघ्नविनाशकाय ॥ २८ ॥
२७५. यज्ञकर्मफलाध्यक्षाय
२७६. यज्ञमूर्तये
२७७. अनातुराय
२७८. प्रपथ्याय
२७९. किंशिलाय
२८०. गेह्याय
२८१. गृह्याय
२८२. तल्प्याय

२८३. धनाकराय ॥ २९ ॥
२८४. पुलस्त्याय
२८५. क्षयणाय
२८६. गोष्ठ्याय
२८७. गोविन्दाय
२८८. गीतसत्क्रियाय
२८९. ह्रदय्याय
२९०. हृद्यकृते
२९१. हृद्याय
२९२. गह्व रेष्ठाय
२९३. प्रभाकराय ॥ ३० ॥
२९४. निवेष्प्याय
२९५. नियताय
२९६. अयन्त्रे
२९७. पांसव्याय
२९८. संप्रतापनाय
२९९. शुष्क्याय
३००. हरित्याय
३०१. अपूतात्मने
३०२. रजस्याय
३०३. सात्विकप्रियाय ॥ ३१ ॥
३०४. लोप्याय
३०५. उलप्याय
३०६. पर्णशद्याय
३०७. पर्ण्याय
३०८. पूर्णाय
३०९. पुरातनाय
३१०. भूताय
३११. भूतपतये
३१२. भूपाय
३१३. भूधराय
३१४. भूधरायुधाय ॥ ३२ ॥

३१५. भूतसंघाय

३१६. भूतमूर्तये

३१७. भूतघ्ने

३१८. भूतिभूषणाय

३१९. मदनाय

३२०. मादकाय

३२१. माद्याय

३२२. मदघ्ने

३२३. मधुरप्रियाय ॥ ३३ ॥

३२४. मधवे

३२५. मधुकराय

३२६. क्रूराय

३२७. मधुराय

३२८. मदनान्तकाय

३२९. निरञ्जनाय

३३०. निराधाराय

३३१. निर्लुप्ताय

३३२. निरुपाधिकाय ॥ ३४ ॥

३३३. निष्प्रपञ्चाय

३३४. निराकाराय

३३५. निरीहाय

३३६. निरुपद्रवाय

३३७. सत्वाय

३३८. सत्वगुणोपेताय

३३९. सत्ववि ते

३४०. सत्ववित्प्रियाय ॥ ३५ ॥

३४१. सत्वनिष्ठाय

३४२. सत्वमूर्तये

३४३. सत्वेशाय

३४४. सत्ववि त्तमाय

३४५. समस्तजगदाधाराय

३४६. समस्तगुण

सागराय ॥ ३६ ॥

३४७. समस्तदुःखविध्वंसिने

३४८. समस्तानन्दकारणाय

३४९. रुद्राक्षमालाभरणाय

३५०. रुद्राक्षप्रिय

वत्सलाय ॥ ३७ ॥

३५१. रुद्राक्षवक्षसे

३५२. रुद्राक्षरूपाय

३५३. रुद्राक्षपक्षकाय

३५४. विश्वेश्वराय

३५५. वीरभद्राय

३५६. सम्राजे

३५७. दक्षमखान्तकाय ॥ ३८ ॥

३५८. विघ्नेश्वराय

३५९. विघ्नकर्त्रे

३६०. गुरवे देवशिखामणये

३६१. भुजगेन्द्रलसत्कण्ठाय

३६२. भुजंगाभरणप्रियाय ॥ ३९ ॥

३६३. भुजंगविलसत्कर्णाय

३६४. भुजंगवलयावृताय

३६५. मुनिवन्द्याय

३६६. मुनिश्रेष्ठाय

३६७. मुनिवृन्दनिषेविताय ॥ ४० ॥

३६८. मुनिहृत्पुण्डरीकस्थाय

३६९. मुनिसंघैकजीवनाय

३७०. मुनिमृग्याय

३७१. वेदमृग्याय

३७२. मृगहस्ताय

३७३. मुनीश्वराय ॥ ४१ ॥

३७४. मृगेन्द्र चर्मवसनाय

३७५. नरसिह्मनिपातनाय

३७६. मृत्युञ्जयाय

३७७. मृत्युमृत्यवे
३७८. अपमृत्युविनाशकाय ॥ ४२ ॥
३७९. दुष्टमृत्यवे
३८०. अदुष्टेष्ठाय
३८१. मृत्युघ्ने मृत्युपूजिताय
३८२. ऊर्ध्वाय
३८३. हिरण्याय
३८४. परमाय
३८५. निधनेशाय
३८६. धनाधिपाय ॥ ४३ ॥
३८७. यजुर्मूर्तये
३८८. साममूर्तये
३८९. ऋङ्मूर्तये
३९०. मूर्तिवर्जिताय
३९१. व्यक्ताय
३९२. व्यक्ततमाय
३९३. अव्यक्ताय
३९४. व्यक्ताव्यक्ताय
३९५. तमसे
३९६. जव्यै ॥ ४४ ॥
३९७. लिंगमूर्तये
३९८. अलिंगात्मने
३९९. लिंगालिंगात्म विग्रहाय
४००. ग्रहग्रहाय
४०१. ग्रहाधाराय
४०२. ग्रहाकाराय
४०३. ग्रहेश्वराय ॥ ४५ ॥
४०४. ग्रहकृते
४०५. ग्रहभिदे
४०६. ग्राहिणे
४०७. ग्रहाय

४०८. ग्रहविलक्षणाय
४०९. कल्पाकाराय
४१०. कल्पकर्त्रे
४११. कल्पलक्षण
तत्पराय ॥ ४६ ॥
४१२. कल्पाय
४१३. कल्पाकृतये
४१४. कल्पनाशकाय
४१५. कल्पकल्पकाय
४१६. परमात्मने
४१७. प्रधानात्मने
४१८. प्रधानपुरुषाय
४१९. शिवाय ॥ ४७ ॥
४२०. वेद्याय
४२१. वैद्याय
४२२. वेदवेद्याय
४२३. वेदवेदान्तसंस्तुताय
४२४. वेदवक्त्राय
४२५. वेदजिह्वाय
४२६. विजिह्वाय
४२७. जिह्मनाशकाय ॥ ४८ ॥
४२८. कल्याणरूपाय
४२९. कल्याणाय
४३०. कल्याणगुणसंश्रयाय
४३१. भक्तकल्याणदाय
४३२. भक्तकामधेनवे
४३३. सुराधिपाय ॥ ४९ ॥
४३४. पावनाय
४३५. पावकाय
४३६. वामाय
४३७. महाकालाय
४३८. मदापहाय

४३९. घोरपातकदावाग्नये
४४०. दवभस्मकण -
प्रियाय ॥ ५० ॥
४४१. अनन्तसोमसूर्याग्नि -
मण्डलप्रतिमप्रभाय
४४२. जगदेकप्रभवे
४४३. स्वामिने
४४४. जगद्वन्द्याय
४४५. जगन्मयाय ॥ ५१ ॥
४४६. जगदानन्ददाय
४४७. जन्मजरामरण -
वर्जिताय
४४८. खट्वांगिने
४४९. नीतिमते
४५०. सत्याय
४५१. देवतात्मने
४५२. आत्मसम्भवाय ॥ ५२ ॥
४५३. कपालमालाभरणाय
४५४. कपालिने
४५५. विष्णुवल्लभाय
४५६. कमलासनकालाग्नये
४५७. कमलासनपूजिताय ॥ ५३ ॥
४५८. कालाधीशाय
४५९. त्रिकालज्ञाय
४६०. दुष्टविग्रहवारकाय
४६१. नाट्यकर्त्रे
४६२. नटपराय
४६३. महानाट्यविशारदाय ॥ ५४ ॥
४६४. विराट् रूपधराय
४६५. धीराय
४६६. वीराय

४६७. वृषभवाहनाय
४६८. वृषांकाय
४६९. वृषभाधीशाय
४७०. वृषात्मने
४७१. वृषभध्वजाय ॥ ५५ ॥
४७२. महोन्नताय
४७३. महाकायाय
४७४. महावक्षसे
४७५. महाभुजाय
४७६. महास्कन्धाय
४७७. महाग्रीवाय
४७८. महावक्त्राय
४७९. महाशिरसे ॥ ५६ ॥
४८०. महाहनवे
४८१. महादंष्ट्राय
४८२. महदोष्ठाय
४८३. महोदराय
४८४. सुन्दरभ्रुवे
४८५. सुनयनाय
४८६. सुललाटाय
४८७. सुकन्दराय ॥ ५७ ॥
४८८. सत्यवाक्याय
४८९. धर्मवेत्त्रे
४९०. सत्यज्ञाय
४९१. सत्यवित्तमाय
४९२. धर्मवते
४९३. धर्मनिपुणाय
४९४. धर्माय
४९५. धर्मप्रवर्तकाय ॥ ५८ ॥
४९६. कृतज्ञाय
४९७. कृतकृत्यात्मने
४९८. कृतकृत्याय

४९९. कृतागमाय

५००. कृत्यवि ते

५०१. कृत्यविच्छ्रेष्ठाय

५०२. कृतज्ञप्रिय -

कृत्तमाय ॥ ५९ ॥

५०३. व्रतकृते

५०४. व्रतविच्छ्रेष्ठाय

५०५. व्रतविद्वते

५०६. महाव्रतिने

५०७. व्रतप्रियाय

५०८. व्रताधाराय

५०९. व्रताकाराय

५१०. व्रतेश्वराय ॥ ६० ॥

५११. अतिरागिणे

५१२. वीतरागिणे

५१३. रागहेतवे

५१४. विरागविते

५१५. रागघ्नाय

५१६. रागशमनाय

५१७. रागदाय

५१८. रागिरागविते ॥ ६१ ॥

५१९. विद्वते

५२०. विद्वत्तमाय

५२१. विद्वज्जनमानससंश्रयाय

५२२. विद्वज्जनाश्रयाय

५२३. विद्वज्जनस्तव्य

पराक्रमाय ॥ ६२ ॥

५२४. नीतिकृते

५२५. नीतिविते

५२६. नीतिप्रदात्रे

५२७. नीतिवित्प्रियाय

५२८. विनीतवत्सलाय

५२९. नीतिस्वरूपाय

५३०. नीतिसंश्रयाय ॥ ६३ ॥

५३१. क्रोधविते

५३२. क्रोधकृते

५३३. क्रोधिजनकृते

५३४. क्रोधरूपधृषे

५३५. सक्रोधाय

५३६. क्रोधघ्ने

५३७. क्रोधिजनघ्ने

५३८. क्रोधकारणाय ॥ ६४ ॥

५३९. गुणवते

५४०. गुणविच्छ्रेष्ठाय

५४१. निर्गुणाय

५४२. गुणवित्प्रियाय

५४३. गुणाधाराय

५४४. गुणाकाराय

५४५. गुणकृते

५४६. गुणनाशकाय ॥ ६५ ॥

५४७. वीर्यवते

५४८. वीर्यविच्छ्रेष्ठाय

५४९. वीर्यविदे

५५०. वीर्यसंश्रयाय

५५१. वीर्याकाराय

५५२. वीर्यकराय

५५३. वीर्यघ्ने

५५४. वीर्यवर्धकाय ॥ ६६ ॥

५५५. कालविते

५५६. कालकृते

५५७. कालाय

५५८. बलकृते

५५९. बलविदे

५६०. बलिने

५६१. मनोन्मनाय
५६२. मनोरूपाय
५६३. बलप्रमथनाय
५६४. बलाय ॥ ६७ ॥
५६५. विद्याप्रदात्रे
५६६. विद्येशाय
५६७. विद्यामात्रैकसंश्रयाय
५६८. विद्याकाराय
५६९. महाविद्याय
५७०. विद्याविद्याय
५७१. विशारदाय ॥ ६८ ॥
५७२. वसन्तकृते
५७३. वसन्तात्मने
५७४. वसन्तेशाय
५७५. वसन्तदाय
५७६. ग्रीष्मात्मने
५७७. ग्रीष्मकृते
५७८. ग्रीष्मवर्धकाय
५७९. ग्रीष्मनाशकाय ॥ ६९ ॥
५८०. प्रावृट् कृते
५८१. प्रावृडाकाराय
५८२. प्रावृट्कालप्रवर्तकाय
५८३. प्रावृट् प्रवर्धकाय
५८४. प्रावृण्णाथाय
५८५. प्रावृड्विनाशकाय ॥ ७० ॥
५८६. शरदात्मने
५८७. शरद् हेतवे
५८८. शरत्कालप्रवर्तकाय
५८९. शरन्नाथाय
५९०. शरत्कालनाशकाय
५९१. शरदाश्रयाय ॥ ७१ ॥
५९२. हिमस्वरूपाय

५९३. हिमदाय
५९४. हिमघ्ने
५९५. हिमनायकाय
५९६. शैशिरात्मने
५९७. शैशिरेशाय
५९८. शैशिरर्तु प्रवर्तकाय ॥ ७२ ॥
५९९. प्राच्यात्मने
६००. दक्षिणाकाराय
६०१. प्रतीच्यात्मने
६०२. उत्तराकृतये
६०३. आग्नेयात्मने
६०४. निर्ऋतीशाय
६०५. वायव्यात्मने
६०६. ईशनायकाय ॥ ७३ ॥
६०७. ऊर्ध्वाधाय
६०८. सुदिगाकाराय
६०९. नानादेशैकनायकाय
६१०. सर्वपक्षिमृगाकाराय
६११. सर्वपक्षिमृगाधिपाय ॥ ७४ ॥
६१२. सर्वपक्षिमृगाधाराय
६१३. मृगाद्युत्पत्तिकारणाय
६१४. जीवाध्यक्षाय
६१५. जीववन्द्याय
६१६. जीवविते
६१७. जीवरक्षकाय ॥ ७५ ॥
६१८. जीवकृते
६१९. जीवघ्ने
६२०. जीवजीवनाय
६२१. जीवसंश्रयाय
६२२. ज्योतिःस्वरूपिणे
६२३. विश्वात्मने

६२४. विश्वनाथाय

६२५. वियत्पतये ॥ ७६ ॥

६२६. वज्रात्मने

६२७. वज्रहस्तात्मने

६२८. वज्रेशाय

६२९. वज्रभूषिताय

६३०. कुमारगुरवे ईशानाय

६३१. गणाध्यक्षाय

६३२. गणाधिपाय ॥ ७७ ॥

६३३. पिनाकपाणये

६३४. सूर्यात्मने

६३५. सोमसूर्याग्नि लोचनाय

६३६. अपायरहिताय

६३७. शान्ताय

६३८. दान्ताय

६३९. दमयित्रे

६४०. दमाय ॥ ७८ ॥

६४१. ऋषये पुराणपुरुषाय

६४२. पुरुषेशाय

६४३. पुरन्दराय

६४४. कालाग्निरुद्राय

६४५. सर्वेशाय

६४६. शमरूपाय

६४७. शमेश्वराय ॥ ७९ ॥

६४८. प्रलयानलकृत्

६४९. दिव्याय

६५०. प्रलयानलनाशकाय

६५१. त्रियम्बकाय

६५२. अरिषड्वर्गनाशकाय

६५३. धनदप्रियाय ॥ ८० ॥

६५४. अक्षोभ्याय

६५५. क्षोभरहिताय
६५६. क्षोभदाय
६५७. क्षोभनाशकाय
६५८. सदम्भाय
६५९. दम्भरहिताय
६६०. दम्भदाय
६६१. दम्भनाशकाय ॥ ८१ ॥
६६२. कुन्देन्दुशंखधवलाय
६६३. भस्मोद्धूलितविग्रहाय
६६४. भस्मधारणहृष्टात्मने
६६५. तुष्टये
६६६. पु ष्टये
६६७. अरिसूदनाय ॥ ८२ ॥
६६८. स्थाणवे
६६९. दिगम्बराय
६७०. भर्गाय
६७१. भगनेत्रभिदे
६७२. उद्यमाय
६७३. त्रिकाग्नये
६७४. कालकालाग्नये
६७५. अद्वितीयाय
६७६. महायशसे ॥ ८३ ॥
६७७. सामप्रियाय
६७८. सामवे त्त्रे
६७९. सामगाय
६८०. सामगप्रियाय
६८१. धीरोदात्त्रे
६८२. महाधीराय
६८३. धैर्यदाय
६८४. धैर्यवर्धकाय ॥ ८४ ॥
६८५. लावण्यराशये
६८६. सर्वज्ञाय सुबुद्धये

६८७. बुद्धिमते वराय

६८८. तुम्बवीणाय

६८९. कम्बुकण्ठाय

६९०. शम्बरारिनि -
कृन्तनाय ॥ ८५ ॥

६९१. शार्दूलचर्मवसनाय

६९२. पूर्णानन्दाय

६९३. जगत्प्रियाय

६९४. जयप्रदाय

६९५. जयाध्यक्षाय

६९६. जयात्मने

६९७. जयकारणाय ॥ ८६ ॥

६९८. जंगमाजंगमाकाराय

६९९. जगदु त्पत्तिकारणाय

७००. जगद्र क्षाकराय

७०१. वश्याय

७०२. जगत् प्रलयकारणाय ॥ ८७ ॥

७०३. पूषदन्तभिदे

७०४. उत्कृष्टाय

७०५. पञ्चयज्ञाय

७०६. प्रभञ्जकाय

७०७. अष्टमूर्तये

७०८. विश्वमूर्तये

७०९. अतिमूर्तये

७१०. अमूर्तिमते ॥ ८८ ॥

७११. कैलासशिखरावासाय

७१२. कैलासशिखरप्रियाय

७१३. भक्तकैलासदाय

७१४. सूक्ष्माय

७१५. मर्मज्ञाय

७१६. सर्वशिक्षकाय ॥ ८९ ॥

७१७. सोमाय सोमकलाकाराय

७१८. महातेजसे

७१९. महातपसे

७२०. हिरण्य श्म श्रवे

७२१. आनन्दाय

७२२. स्वर्णकेशाय

७२३. सुवर्णदृ षे ॥ ९० ॥

७२४. ब्रह्मणे

७२५. विश्वसृगे

७२६. उर्वीशाय

७२७. मोचकाय

७२८. बन्धवर्जिताय

७२९. स्वतन्त्राय

७३०. सर्वमन्त्रात्मने

७३१. द्युतिमते अमित प्रभाय ॥ ९१ ॥

७३२. पुष्कराक्षाय

७३३. पुण्यकीर्तये

७३४. पुण्यश्रवणकीर्तनाय

७३५. पुण्यमूर्तये

७३६. पुण्यदात्रे

७३७. पुण्यापुण्यफलप्रदाय ॥ ९२ ॥

७३८. सारभूताय

७३९. स्वरमयाय

७४०. रसभूताय

७४१. रसाश्रयाय

७४२. ओंकाराय

७४३. प्रणवाय

७४४. नादाय

७४५. प्रणतार्तिप्रभञ्जनाय ॥ ९३ ॥

७४६. निकटस्थाय

७४७. अतिदूरस्थाय

७४८. वशिने

७४९. ब्रह्माण्डनायकाय

७५०. मन्दारमूलनिलयाय

७५१. मन्दारकुसुमा -
वृताय ॥ ९४ ॥

७५२. वृन्दारकप्रियतमाय

७५३. वृन्दारकव रार्चिताय

७५४. श्रीमते

७५५. अनन्तकल्याण
परिपूर्णाय

७५६. महोदयाय ॥ ९५ ॥

७५७. महोत्साहाय

७५८. विश्वभोक्त्रे

७५९. विश्वाशापरिपूरकाय

७६०. सुलभाय

७६१. असुलभाय

७६२. लभ्याय

७६३. अलभ्याय

७६४. लाभप्रवर्धकाय ॥ ९६ ॥

७६५. लाभात्मने

७६६. लाभदाय

७६७. वक्त्रे

७६८. द्युतिमते

७६९. अनसूयकाय

७७०. ब्रह्मचारिणे

७७१. दृढाचारिणे

७७२. देवसिह्माय

७७३. धनप्रियाय ॥ ९७ ॥

७७४. वेदपाय

७७५. देवदेवेशाय

७७६. देवदेवाय

७७७. उत्तमोत्तमाय

७७८. बीजराजाय

७७९. बीजहेतवे
७८०. बींजदाय
७८१. बीजवृद्धिदाय ॥ ९८ ॥
७८२. बीजाधाराय
७८३. बीजरूपाय
७८४. निर्बीजाय
७८५. बीजनाशकाय
७८६. परापरेशाय
७८७. वरदाय
७८८. पिंगलाय
७८९. अयुग्म
लोचनाय ॥ ९९ ॥
७९०. पिंगलाक्षाय
७९१. सुरगुरवे
७९२. गुरवे
७९३. सुरगुरुप्रियाय
७९४. युगावहाय
७९५. युगाधीशाय
७९६. युगकृते
७९७. युगनाशकाय ॥ १०० ॥
७९८. कर्पूरगौराय
७९९. गौरीशाय
८००. गौरीगुरुगुहाश्रयाय
८०१. धूर्जटये
८०२. पिंगलजटाय
८०३. जटामण्डल
मण्डिताय ॥ १०१ ॥
८०४. मनोजवाय
८०५. जीवहेतवे
८०६. अन्धकासुरसूदनाय
८०७. लोकबन्धवे
८०८. कलाधाराय

८०९. पाण्डुराय
८१०. प्रमथाधिपाय ॥१०२॥
८११. अव्यक्तलक्षणाय
८१२. योगिने
८१३. योगीशाय
८१४. योगपुंगवाय
८१५. श्रितावासाय
८१६. जनावासाय
८१७. सुरावासाय
८१८. सुमण्डलाय ॥१०३॥
८१९. भववैद्याय
८२०. योगिवैद्याय
८२१. योगिसिह्मह्रदासनाय
८२२. उत्तमाय
८२३. अनुत्तमाय
८२४. अशक्ताय
८२५. कालकण्ठाय
८२६. विषादनाय ॥१०४॥
८२७. आशास्याय
८२८. कमनीयात्मने
८२९. शुभाय
८३०. सुन्दरविग्रहाय
८३१. भक्तकल्पतरवे
८३२. स्तोत्रे
८३३. स्तव्याय
८३४. स्तोत्रवरप्रियाय ॥१०५॥
८३५. अप्रमेयगुणाधाराय
८३६. वेदकृते
८३७. वेदविग्रहाय
८३८. कीर्त्याधाराय
८३९. कीर्तिकराय
८४०. कीर्तिहेतवे

८४१. अहेतुकाय ॥ १०६ ॥
८४२. अप्रधृष्याय
८४३. शान्तभद्राय
८४४. कीर्तिस्तम्भाय
८४५. मनोमयाय
८४६. भूशयाय
८४७. अन्नमयाय
८४८. अभोक्त्रे
८४९. महेष्वासाय
८५०. महीतनवे ॥ १०७ ॥
८५१. विज्ञानमयाय
८५२. आनन्दमयाय
८५३. प्राणमयाय
८५४. अन्नदाय
८५५. सर्वलोकमयाय
८५६. यष्ट्रे
८५७. धर्माधर्मप्रवर्तकाय ॥ १०८ ॥
८५८. अनिर्विण्णाय
८५९. गुणग्राहिणे
८६०. सर्वधर्मफलप्रदाय
८६१. दयासुधार्द्रनयनाय
८६२. निराश्यै
८६३. अपरिग्रहाय ॥ १०९ ॥
८६४. परार्थवृत्तये मधुराय
८६५. मधुरप्रियदर्शनय
८६६. मुक्तादामपरीतांगाय
८६७. निःसंगाय
८६८. मंगलाकराय ॥ ११० ॥
८६९. सुखप्रदाय
८७०. सुखाकाराय
८७१. सुखदुःखविवर्जिताय
८७२. विश्रृंखलाय

८७३. जगते

८७४. कर्त्रे

८७५. जितसर्वाय

८७६. पितामहाय ॥ १११ ॥

८७७. अनपायाय

८७८. अक्षयाय

८७९. मुण्डिने

८८०. सुरूपाय

८८१. रूपवर्जिताय

८८२. अतीन्द्रियाय

८८३. महामायाय

८८४. मायाविने

८८५. विगतज्वराय ॥ ११२ ॥

८८६. अमृताय

८८७. शाश्वताय शान्ताय

८८८. मृत्युघ्ने

८८९. मूकनाशनाय

८९०. महाप्रेतासनासीनाय

८९१. पिशाचानुचरावृताय ॥ ११३ ॥

८९२. गौरीविलाससदनाय

८९३. नानागानविशारदाय

८९४. विचित्रमाल्यवसनाय

८९५. दिव्यचन्दनचर्चिताय ॥ ११४ ॥

८९६. विष्णुब्रह्मादिवन्द्यांघ्रये

८९७. सुरासुरनमस्कृताय

८९८. किरीटलेढिफालेन्दवे

८९९. मणिकंकणभूषिताय ॥ ११५ ॥

९००. रत्नांगदांगाय

९०१. रत्नेशाय

९०२. रत्नरञ्जितपादुकाय

९०३. नवरत्नगणोपेतकिरीटिने

९०४. रत्नकञ्चुकाय ॥ ११६ ॥

१०५. नानाविधानेकरत्नल -

सत्कुण्डलमण्डिताय

१०६. दिव्यरत्नगणाकीण -

कण्ठाभरण -

भूषिताय ॥ ११७ ॥

१०७. गलव्यालमणये

१०८. नासापुटभ्राजित -

मौक्तिकाय

१०९. रत्नांगुलीयविल -

सत्करशाखानख -

प्रभाय ॥ ११८ ॥

११०. रत्नभ्राजद्धेमसूत्रल -

सत्कटितटाय

१११. पटवे

११२. वामांकभागविल -

सत्पार्वतीवीक्षण -

प्रियाय ॥ ११९ ॥

११३. लीलावलम्बितवपवे

११४. भक्तमानसमन्दिराय

११५. मन्दमन्दारपुष्पौघलस -

द्वायुनिषेविताय ॥ १२० ॥

११६. कस्तूरीविलसत्फालाय

११७. दिव्यवेषविराजिताय

११८. दिव्यदेहप्रभाकूटसन्दी -

पितदिगन्तराय ॥ १२१ ॥

११९. देवासुरगुरुस्तव्याय

१२०. देवासुरनमस्कृताय

१२१. हस्तराजत्पुण्डरीकाय

९२२. पुण्डरीकनि -
भेक्षणाय ॥ १२२ ॥
९२३. सर्वाशास्यगुणाय
९२४. अमेयाय
९२५. सर्वलोकेष्टभूषणाय
९२६. सर्वेष्टदात्रे
९२७. सर्वेष्टाय
९२८. स्फुरन्मंगल -
विग्रहाय ॥ १२३ ॥
९२९. अविद्यालेशरहिताय
९३०. नानाविद्यैकसंश्रयाय
९३१. मूर्तिभवाय
९३२. कृपापूराय
९३३. भक्तेष्टफल -
पूरकाय ॥ १२४ ॥
९३४. सम्पूर्णकामाय
९३५. सौभाग्यनिधये
९३६. सौभाग्यदायकाय
९३७. हितैषिने
९३८. हितकृते
९३९. सौम्याय
९४०. परार्थैकप्रयोजनाय ॥ १२५ ॥
९४१. शरणागतदीनार्त -
परित्राणपरायणाय
९४२. जिष्णवे
९४३. नेत्रे
९४४. वषट्काराय
९४५. भ्राजिष्णवे
९४६. भोजनाय
९४७. हविषे ॥ १२६ ॥
९४८. भोक्त्रे
९४९. भोजयित्रे

९५०. जेत्रे
९५१. जितारये
९५२. जितमानसाय
९५३. अक्षराय
९५४. कारणाय
९५५. क्रुद्धसमराय
९५६. शारदप्लवाय ॥ १२७ ॥
९५७. आज्ञापकेच्छाय
९५८. गम्भीराय
९५९. कवये
९६०. दुःस्वप्ननाशकाय
९६१. पञ्चब्रह्मसमुत्पत्तये
९६२. क्षेत्रज्ञाय
९६३. क्षेत्रपालकाय ॥ १२८ ॥
९६४. व्योमकेशाय
९६५. भीमवेषाय
९६६. गौरीपतये
९६७. अनामयाय
९६८. भवाब्धितरणोपायाय
९६९. भगव ते
९७०. भक्तवत्सलाय ॥ १२९ ॥
९७१. वराय
९७२. वरिष्ठाय
९७३. नेदिष्ठाय
९७४. प्रियाय
९७५. प्रियदवाय
९७६. सुधिये
९७७. यन्त्रे
९७८. यविष्ठाय
९७९. क्षोदिष्ठाय
९८०. स्थविष्ठाय
९८१. यमशासकाय ॥ १३० ॥

९८२. हिरण्यगर्भाय

९८३. हेमांगाय

९८४. हेमरूपाय

९८५. हिरण्यदाय

९८६. ब्रह्मज्योतषे

९८७. अनावेक्ष्याय

९८८. चामुण्डाजनकाय

९८९. रवये ॥१३१॥

९९०. मोक्षार्थिजनसंसेव्याय

९९१. मोक्षदाय

९९२. मोक्षनायकाय

९९३. महाश्मशाननिलयाय

९९४. वेदाश्वाय

९९५. भूरथाय

९९६. स्थिराय ॥१३२॥

९९७. मृगव्याधाय

९९८. चर्मधाम्ने

९९९. प्रच्छन्नाय

१०००. स्फटिकप्रभाय

१००१. सर्वज्ञाय

१००२. परमार्थात्मने

१००३. ब्रह्मानन्दाश्रयाय

१००४. विभवे ॥१३३॥

१००५. महेश्वराय

१००६. महादेवाय

१००७. परब्रह्मणे

१००८. सदाशिवाय ॥१३४॥

# <u>NOTE</u>:

There are a few arsha prayogas in this sahasranama. Primarily, I think it is because of the non-inclusion of 'ca', 'tathA' etc. Also, the names of the rudra trishati are difficult to fit in the shlokas.

**1.Irregular forms:**

1. khanda parshu: instead of khanda parashu: (nama 230)
2. triyambaka: instead of tryambaka:(nama 651)
3. mahadOSTha: instead of mahouSTha: (nama 482)

**2.Irregular sandhis:**

1. pravAhyODhA for pravAhya UDhA (verse 27)
2. madhyamOrmya: for madhyama Urmya: (verse 12)
3. khalyOrvarya: for khalya urvarya: (verse 13)
4. lOpyOlapya: for lOpya ulapya (verse 32)

Send your corrections to:
R.Ravichander
r_ravi_c@hotmail.com